# Taittirīya-Āraṇyaka

Edited by Subramania Sarma, Chennai

Proofread Version of November 2005

## Chapter 4

[[4-0-0]]

नमोऽनु मदन्तु॥

ॐ शान्तिः शान्तिः शान्तिः॥

[[4-1-1]]

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यश्शर्म मे द्यौश्शर्म पृथिवी शर्म विश्वमिदं जगत्।

शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती।

भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु॥

ॐ शान्तिः शान्तिः शान्तिः॥ १॥

[[4-2-1]]

युञ्जते मन उत युञ्जते धियः।

विप्रा विप्रस्य बृहतो विपश्चितः।

वि होत्रा दधे वयुनाविदेक इत्।

मही देवस्य सवितुः परिष्टुतिः।

देवस्य त्वा सवितुः प्रसवे।

अश्विनोर्बाहुभ्याम्।
पूष्णो हस्ताभ्यामाददे।
अभ्रिरसि नारिरसि।
अध्वरकृद्देवेभ्यः।
उत्तिष्ठ ब्रह्मणस्पते॥ २॥

[[4-2-2]]
देवयन्तस्त्वेमहे।
उपप्रयन्तु मरुतस्सुदानवः।
इन्द्र प्राशूर्भवा सचा।
प्रैतु ब्रह्मणस्पतिः।
प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसम्।
देवा यज्ञं नयन्तु नः।
देवी द्यावापृथिवी अनु मेऽमꣳसाथाम्।
ऋध्यासमद्य।
मखस्य शिरः॥ ३॥

[[4-2-3]]
मखाय त्वा।
मखस्य त्वा शीर्ष्णे।
इयत्यग्र आसीः।
ऋध्यासमद्य।
मखस्य शिरः।
मखाय त्वा।
मखस्य त्वा शीर्ष्णे।
देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः।
ऋध्यासमद्य।
मखस्य शिरः॥ ४॥

[[4-2-4]]

म॒खाय॑ त्वा।
म॒खस्य॑ त्वा शी॒र्ष्णे॑।
इन्द्र॒स्यौजो॑ऽसि।
ऋ॒ध्यास॑म॒द्य।
म॒खस्य॒ शिर॑ः।
म॒खाय॑ त्वा।
म॒खस्य॑ त्वा शी॒र्ष्णे॑।
अ॒ग्नि॒जा अ॑सि प्र॒जाप॑ते॒ रेत॑ः।
ऋ॒ध्यास॑म॒द्य।
म॒खस्य॒ शिर॑ः॥ ५॥

[[4-2-5]]
म॒खाय॑ त्वा।
म॒खस्य॑ त्वा शी॒र्ष्णे॑।
आयु॑र्धेहि प्रा॒णं धे॑हि।
अ॒पा॒नं धे॑हि व्या॒नं धे॑हि।
चक्षु॑र्धेहि॒ श्रोत्रं॑ धेहि।
मनो॑ धेहि॒ वाचं॑ धेहि।
आ॒त्मानं॑ धेहि प्र॒ति॒ष्ठां धे॑हि।
मां धे॑हि॒ मयि॑ धेहि।
मधु॑ त्वा मधु॒ला क॑रोतु।
म॒खस्य॒ शिरो॑सि॥ ६॥

[[4-2-6]]
य॒ज्ञस्य॑ प॒दे स्थ॑ः।
गा॒य॒त्रेण॑ त्वा॒ छन्द॑सा करोमि।
त्रैष्टु॑भेन त्वा॒ छन्द॑सा करोमि।
जाग॑तेन त्वा॒ छन्द॑सा करोमि।
म॒खस्य॒ रास्ना॑ऽसि।
अदि॑तिस्ते॒ बिलं॑ गृह्णातु।

पाङ्क्तेन छन्दसा।
सूर्यस्य हरसा श्राय।
मखोऽसि॥ ७॥
पते शिर ऋतावरीर्ऋध्यासमद्य मखस्य शिरश्शिरश्शिरोऽसि नव च॥ २॥
इयति देवीरिन्द्रस्यौजोऽस्यग्निजा अस्यायुर्धेहि प्राणं पञ्च॥

[[4-3-1]]
वृष्णो अश्वस्य निष्पदसि।
वरुणस्त्वा धृतव्रत आधूपयतु।
मित्रावरुणयोर्ध्रुवेण धर्मणा।
अर्चिषे त्वा।
शोचिषे त्वा।
ज्योतिषे त्वा।
तपसे त्वा।
अभीमं महिना दिवम्।
मित्रो बभूव सप्रथाः।
उत श्रवसा पृथिवीम्॥ ८॥

[[4-3-2]]
मित्रस्य चर्षणीधृतः।
श्रवो देवस्य सानसिम्।
द्युम्नं चित्रश्रवस्तमम्।
सिध्यै त्वा।
देवस्त्वा सवितोद्वपतु।
सुपाणिस्स्वङ्गुरिः।
सुबाहुरुत शक्त्या।
अपद्यमानः पृथिव्याम्।
आशा दिश आपृण।
उत्तिष्ठ बृहन्भव॥ ९॥

[[4-3-3]]

ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम्।
सूर्यस्य त्वा चक्षुषाऽन्वीक्षे।
ऋजवे त्वा।
साधवे त्वा।
सुक्षित्यै त्वा भूत्यै त्वा।
इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि।
गायत्रेण त्वा छन्दसाऽऽच्छृणद्मि।
त्रैष्टुभेन त्वा छन्दसाऽऽच्छृणद्मि।
जागतेन त्वा छन्दसाऽऽच्छृणद्मि।
छृणत्तु त्वा वाक्।
छृणत्तु त्वोर्क्।
छृणत्तु त्वा हविः।
छृन्धि वाचम्।
छृन्ध्यूर्जम्।
छृन्धि हविः।
देव पुरश्चर सघ्यासं त्वा॥ १०॥
पृथिवीं भव वाग्वषड्॥ ३॥

[[4-4-1]]
ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः।
होतर्घर्ममभिष्टुहि।
अग्नीद्रौहिणौ पुरोडाशावधिश्रय।
प्रतिप्रस्थातर्विहर।
प्रस्तोतस्सामानि गाय।
यजुर्युक्तꣳ सामभिराक्तखं त्वा।
विश्वैर्देवैरनुमतं मरुद्भिः।
दक्षिणाभिः प्रततं पारयिष्णुम्।
स्तुभो वहन्तु सुमनस्यमानम्।
स नो रुचं धेह्यहृणीयमानः।
भूर्भुवस्सुवः।

ओमिन्द्रवन्तः प्रचरत॥ ११॥
अहृणीयमानो द्वे च॥ ४॥

[[4-5-1]]
ब्रह्मन्प्रचरिष्यामः।
होतर्घर्ममभिष्टुहि।
यमाय त्वा मखाय त्वा।
सूर्यस्य हरसे त्वा।
प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा।
चक्षुषे स्वाहा श्रोत्राय स्वाहा।
मनसे स्वाहा वाचे सरस्वत्यै स्वाहा।
दक्षाय स्वाहा क्रतवे स्वाहा।
ओजसे स्वाहा बलाय स्वाहा।
देवस्त्वा सविता मध्वाऽनक्तु॥ १२॥

[[4-5-2]]
पृथिवीं तपसस्त्रायस्व।
अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि।
सꣳ सीदस्व महाꣳ असि।
शोचस्व देववीतमः।
विधूममग्ने अरुषं मियेध्य।
सृज प्रशस्त दर्शतम्।
अञ्जन्ति यं प्रथयन्तो न विप्राः।
वपावन्तं नाग्निना तपन्तः।
पितुर्न पुत्र उपसि प्रेष्ठः।
आ घर्मो अग्निमृतयन्नसादीत्॥ १३॥

[[4-5-3]]
अनाधृष्या पुरस्तात्।
अग्नेराधिपत्ये।
आयुर्मे दाः।

पुत्रवती दक्षिणतः।
इन्द्रस्याधिपत्ये।
प्रजां मे दाः।
सुषदा पश्चात्।
देवस्य सवितुराधिपत्ये।
प्राणं मे दाः।
आश्रुतिरुत्तरतः॥ १४॥

[[4-5-4]]
मित्रावरुणयोराधिपत्ये।
श्रोत्रं मे दाः।
विधृतिरुपरिष्टात्।
बृहस्पतेराधिपत्ये।
ब्रह्म मे दाः क्षत्त्रं मे दाः।
तेजो मे धा वर्चो मे धाः।
यशो मे धास्तपो मे धाः।
मनो मे धाः।
मनोरश्वाऽसि भूरिपुत्रा।
विश्वाभ्यो मा नाष्ट्राभ्यः पाहि॥ १५॥

[[4-5-5]]
सूपसदा मे भूया मा मा हिꣳसीः।
तपो ष्वग्ने अन्तराꣳ अमित्रान्।
तपा शꣳसमररुषः परस्य।
तपा वसो चिकितानो अचित्तान्।
वि ते तिष्ठन्तामजरा अयासः।
चितस्स्थ परिचितः।
स्वाहा मरुद्भिः परिश्रयस्व।
मा असि।
प्रमा असि।

प्रतिमा असि॥ १६॥

[[4-5-6]]
संमा असि।
विमा असि।
उन्मा असि।
अन्तरिक्षस्यान्तर्धिरसि।
दिवं तपसस्त्रायस्व।
आभिर्गीर्भिर्यदतो न ऊनम्।
आप्यायय हरिवो वर्धमानः।
यदा स्तोतृभ्यो महि गोत्रा रुजासि।
भूयिष्ठभाजो अध ते स्याम।
शुक्रं ते अन्यद्यजतं ते अन्यत्॥ १७॥

[[4-5-7]]
विषुरूपे अहनी द्यौरिवासि।
विश्वा हि माया अवसि स्वधावः।
भद्रा ते पूषन्निह रातिरस्तु।
अर्हन्बिभर्षि सायकानि धन्व।
अर्हन्निष्कं यजतं विश्वरूपम्।
अर्हन्निदं दयसे विश्वमब्भुवम्।
न वा ओजीयो रुद्र त्वदस्ति।
गायत्रमसि।
त्रैष्टुभमसि।
जागतमसि।
मधु मधु मधु॥ १८॥
अनत्त्वसादीदुत्तरतः पाहि प्रतिमा असि यजतं ते अन्यज्जागतमस्येकं च॥ ५॥

[[4-6-1]]
दश प्राचीर्दश भासि दक्षिणा।
दश प्रतीचीर्दश भास्युदीचीः।

द॒शो॒र्ध्वा॑ भा॑सि सुमन॒स्यमा॑नः।
स नो॒ रुचं॑ धे॒ह्यहृ॑णीयमानः।
अ॒ग्निष्ट्वा॒ वसु॑भिः पु॒रस्ता᳚द्रोचयतु गाय॒त्रेण॒ छन्द॑सा।
स मा॑ रुचि॒तो रो॑चय।
इन्द्र॑स्त्वा रु॒द्रैर्द॑क्षिण॒तो रो॑चयतु॒ त्रैष्टु॑भेन॒ छन्द॑सा।
स मा॑ रुचि॒तो रो॑चय।
वरु॑णस्त्वादि॒त्यैः प॒श्चाद्रो॑चयतु॒ जाग॑तेन॒ छन्द॑सा।
स मा॑ रुचि॒तो रो॑चय॥ १९॥

[[4-6-2]]
द्यु॒ता॒नस्त्वा॑ मारु॒तो म॒रुद्भि॑रुत्तर॒तो रो॑चय॒त्वानु॑ष्टुभे॒न छन्द॑सा।
स मा॑ रुचि॒तो रो॑चय।
बृ॒ह॒स्पति॑स्त्वा॒ विश्वै᳚र्दे॒वैरु॒परि॑ष्टाद्रोचयतु॒ पाङ्क्ते॑न॒ छन्द॑सा।
स मा॑ रुचि॒तो रो॑चय।
रो॒चि॒तस्त्वं दे॑व घर्म दे॒वेष्व॑सि।
रो॒चि॒षी॒याहं म॑नु॒ष्ये॑षु।
सम्रा᳚ड्घर्म रुचि॒तस्त्वं दे॒वेष्वायु॑ष्मा॒ꣳस्तेज॒स्वी ब्र॑ह्मवर्च॒स्य॑सि।
रु॒चि॒तो॑ऽहं म॑नु॒ष्ये᳚ष्वायु॑ष्मा॒ꣳस्तेज॒स्वी ब्र॑ह्मवर्च॒सी भू॑यासम्।
रुग॑सि।
रुचं॒ मयि॑ धेहि॥ २०॥

[[4-6-3]]
म॒यि॒ रुक्।
दश॑ पु॒रस्ता᳚द्रोचसे।
दश॑ द॒क्षिणा।
दश॑ प्र॒त्यङ्।
दशोद॑ङ्।
द॒शो॒र्ध्वो भा॑सि सुमन॒स्यमा॑नः।
स न॑स्सम्रा॒डिष॒मूर्जं॑ धेहि।
वा॒जी वा॒जिने॑ पवस्व।

रोचितो घर्मो रुचीय॥ २१॥
रोचय धेहि नव च॥ ६॥

[[4-7-1]]
अपश्यं गोपामनिपद्यमानम्।
आ च परा च पथिभिश्चरन्तम्।
स सध्रीचीस्स विषूचीर्वसानः।
आवरीवर्ति भुवनेष्वन्तः।
अत्र प्रावीः।
मधुमाध्वीभ्यां मधुमाधूचीभ्याम्।
अनु वां देववीतये।
समग्निरग्निना गत।
सं देवेन सवित्रा।
सꣳ सूर्येण रोचते॥ २२॥

[[4-7-2]]
स्वाहा समग्निस्तपसा गत।
सं देवेन सवित्रा।
सꣳ सूर्येणारोचिष्ट।
धर्ता दिवो विभासि रजसः।
पृथिव्या धर्ता।
उरोरन्तरिक्षस्य धर्ता।
धर्ता देवो देवानाम्।
अमर्त्यस्तपोजाः।
हृदे त्वा मनसे त्वा।
दिवे त्वा सूर्याय त्वा॥ २३॥

[[4-7-3]]
ऊर्ध्वमिममध्वरं कृधि।
दिवि देवेषु होत्रा यच्छ।
विश्वासां भुवां पते।

विश्व॑स्य भुवनस्पते।
विश्व॑स्य मनसस्पते।
विश्व॑स्य वचसस्पते।
विश्व॑स्य तपसस्पते।
विश्व॑स्य ब्रह्मणस्पते।
दे॒व॒श्रूस्त्वं दे॑व घर्म दे॒वान्पा॑हि।
त॒पो॒जां वाच॑म॒स्मे निय॑च्छ देवा॒युव᳚म्॥ २४॥

[[4-7-4]]
गर्भो᳚ दे॒वाना᳚म्।
पि॒ता म॑ती॒नाम्।
पति॑ः प्र॒जाना᳚म्।
मति॑ः कवी॒नाम्।
सं दे॒वो दे॒वेन॑ सवि॒त्राऽय॑तिष्ट।
सꣳ सूर्ये᳚णारुक्त।
आ॒युर्द॒स्त्वम॒स्मभ्य॑ं घर्म वर्चो॒दा अ॑सि।
पि॒ता नो॑ऽसि पि॒ता नो॑ बोध।
आ॒युर्धास्त॑नू॒धाः प॑यो॒धाः।
व॒र्चो॒दा व॑रिवो॒दा द्र॑विणो॒दाः॥ २५॥

[[4-7-5]]
अ॒न्त॒रि॒क्ष॒प्र उ॒रोर्वरी॑यान्।
अ॒शी॒महि॑ त्वा॒ मा मा॑ हिꣳसीः।
त्वम॑ग्ने गृ॒हप॑तिर्वि॒शाम॑सि।
विश्वा॑सां॒ मानु॑षीणाम्।
श॒तं पू॒र्भिर्य॑विष्ठ पा॒ह्यꣳह॑सः।
स॒मे॒द्धार॑ꣳ श॒तꣳ हिमा᳚ः।
त॒न्द्रा॒विण॑ꣳ हा॒र्दिवा॒नम्।
इ॒हैव रा॒तय॑स्सन्तु।
त्वष्टी॑मती ते सपेय।

सु॒रेता॒ रेतो॒ दधा॑ना।
वी॒रं वि॑दे॒य तव॑ सं॒दृशि॑।
माऽहꣳ रा॒यस्पोषे॑ण॒ वियो॑षम्॥ २६॥
रो॒च॒ते॒ सूर्या॑य त्वा देवा॒युवं॑ द्रविणो॒दा दधा॑ना॒ द्वे च॑॥ ७॥

[[4-8-1]]
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे।
अ॒श्विनो᳚र्बा॒हुभ्या᳚म्।
पू॒ष्णो हस्ता᳚भ्या॒माद॑दे।
अदि॑त्यै॒ रास्ना॑ऽसि।
इड॒ एहि॑।
अदि॑त॒ एहि॑।
सर॑स्व॒त्येहि॑।
असा॒वेहि॑।
असा॒वेहि॑।
असा॒वेहि॑॥ २७॥

[[4-8-2]]
अदि॑त्या उ॒ष्णीष॑मसि।
वा॒युर॑स्यै॒डः।
पू॒षा त्वो॒पाव॑सृजतु।
अ॒श्विभ्यां॒ प्रदा॑पय।
यस्ते॒ स्तन॑श्शश॒यो यो म॑यो॒भूः।
येन॒ विश्वा॒ पुष्य॑सि॒ वार्या᳚णि।
यो र॑त्न॒धा व॑सु॒विद्यस्सु॒दत्रः॑।
सर॑स्वति॒ तमि॒ह धात॑वेऽकः।
उस्र॑ घ॒र्मꣳ शि॑ꣳष।
उस्र॑ घ॒र्मं पा॑हि॥ २८॥

[[4-8-3]]
घ॒र्माय॑ शिꣳष।

बृहस्पतिस्त्वोपसीदतु।
दानवस्स्थ पेरवः।
विष्वग्वृतो लोहितेन।
अश्विभ्यां पिन्वस्व।
सरस्वत्यै पिन्वस्व।
पूष्णे पिन्वस्व।
बृहस्पतये पिन्वस्व।
इन्द्राय पिन्वस्व।
इन्द्राय पिन्वस्व॥ २९॥

[[4-8-4]]
गायत्रोऽसि।
त्रैष्टुभोसि।
जागतमसि।
सहोर्जो भागेनोप मेहि।
इन्द्राश्विना मधुनस्सारघस्य।
घर्मं पात वसवो यजता वट्।
स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि।
मधु हविरसि।
सूर्यस्य तपस्तप।
द्यावापृथिवीभ्यां त्वा परिगृह्णामि॥ ३०॥

[[4-8-5]]
अन्तरिक्षेण त्वोपयच्छामि।
देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयम्।
तेजोऽसि।
तेजोऽनुप्रेहि।
दिविस्पृङ्मा मा हिꣳसीः।
अन्तरिक्षस्पृङ्मा मा हिꣳसीः।
पृथिविस्पृङ्मा मा हिꣳसीः।

सुवरसि सुवर्मे यच्छ।
दिवं यच्छ दिवो मा पाहि॥ ३१॥
एहि पाहि पिन्वस्व गृह्णामि नव च॥ ८॥

[[4-9-1]]
समुद्राय त्वा वाताय स्वाहा।
सलिलाय त्वा वाताय स्वाहा।
अनाधृष्याय त्वा वाताय स्वाहा।
अप्रतिधृष्याय त्वा वाताय स्वाहा।
अवस्यवे त्वा वाताय स्वाहा।
दुवस्वते त्वा वाताय स्वाहा।
शिमिद्वते त्वा वाताय स्वाहा।
अग्नये त्वा वसुमते स्वाहा।
सोमाय त्वा रुद्रवते स्वाहा।
वरुणाय त्वाऽऽदित्यवते स्वाहा॥ ३२॥

[[4-9-2]]
बृहस्पतये त्वा विश्वदेव्यावते स्वाहा।
सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा।
यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा।
विश्वा आशा दक्षिणसत्।
विश्वान्देवानयाडिह।
स्वाहाकृतस्य घर्मस्य।
मधोः पिबतमश्विना।
स्वाहाऽग्नये यज्ञियाय।
शं यजुर्भिः।
अश्विना घर्मं पातꣳ हार्दिवानम्॥ ३३॥

[[4-9-3]]
अहर्दिवाभिरूतिभिः।
अनु वां द्यावापृथिवी मꣳसाताम्।

स्वाहेन्द्रा॑य।
स्वाहेन्द्रा॒ वट्।
घ॒र्मम॑पातमश्विना हार्दि॑वा॒नम्।
अह॑र्दि॒वाभि॑रू॒तिभि॑ः।
अनु॑ वा॒ं द्यावा॑पृथि॒वी अ॑मꣳसाताम्।
तं प्रा॒व्यं᳚ यथा॒ वट्।
नमो॑ दि॒वे।
नम॑ः पृथि॒व्यै॥ ३४॥

[[4-9-4]]
दि॒वि धा॑ इ॒मं य॒ज्ञम्।
य॒ज्ञमि॒मं दि॒वि धा᳚ः।
दिवं॑ गच्छ।
अ॒न्तरि॑क्षं गच्छ।
पृ॒थि॒वीं ग॑च्छ।
पञ्च॑ प्र॒दिशो॑ गच्छ।
दे॒वान्घ॑र्म॒पान्ग॑च्छ।
पि॒तॄन्घ॑र्म॒पान्ग॑च्छ॥ ३५॥
आ॒दि॒त्यव॑ते॒ स्वाहा॑ हार्दि॑वा॒नं पृ॑थि॒व्या अ॒ष्टौ च॑॥ ९॥

[[4-10-1]]
इ॒षे पी॑पिहि।
ऊ॒र्जे पी॑पिहि।
ब्रह्म॑णे पीपिहि।
क्ष॒त्त्राय॑ पीपिहि।
अ॒द्भ्यः पी॑पिहि।
ओष॑धीभ्यः पीपिहि।
वन॒स्पति॑भ्यः पीपिहि।
द्यावा॑पृथि॒वीभ्यां᳚ पीपिहि।
सु॒भू॒ताय॑ पीपिहि।

ब्र॒ह्म॒व॒र्च॒साय॑ पीपिहि॥ ३६॥

[[4-10-2]]
यज॑मानाय पीपिहि।
मह्यं॒ ज्यैष्ठ्या॑य पीपिहि।
त्विष्यै॑ त्वा।
द्यु॒म्नाय॑ त्वा।
इ॒न्द्रि॒याय॑ त्वा॒ भूत्यै॑ त्वा।
धर्मा॑ऽसि सु॒धर्मा॑ मे॑ न्य॒स्मे।
ब्रह्मा॑णि धारय।
क्ष॒त्त्राणि॑ धारय।
विशं॑ धारय।
नेत्त्वा॒ वात॑स्स्क॒न्दया॑त्॥ ३७॥

[[4-10-3]]
अ॒मुष्य॑ त्वा प्रा॒णे सा॑दयामि।
अ॒मुना॑ स॒ह नि॑र॒र्थं ग॑च्छ।
यो᳚ऽस्मान्द्वेष्टि॑।
यं च॑ व॒यं द्वि॒ष्मः।
पू॒ष्णे शर॑से॒ स्वाहा᳚।
ग्रावे॑भ्य॒स्स्वाहा᳚।
प्र॒ति॒रेभ्य॒स्स्वाहा᳚।
द्यावा॑पृथि॒वीभ्या॒ꣴ॒ स्वाहा᳚।
पि॒तृभ्यो॑ घ॒र्मपे॑भ्य॒स्स्वाहा᳚।
रु॒द्राय॑ रु॒द्रहो᳚त्रे॒ स्वाहा॑॥ ३८॥

[[4-10-4]]
अह॒र्ज्योति॑ः के॒तुना॑ जुषताम्।
सु॒ज्यो॒तिर्ज्योति॑षा॒ꣴ॒ स्वाहा᳚।
रात्रि॒र्ज्योति॑ः के॒तुना॑ जुषताम्।
सु॒ज्यो॒तिर्ज्योति॑षा॒ꣴ॒ स्वाहा᳚।

अपीपरो माऽह्नो रात्रियै मा पाहि।
एषा ते अग्ने समित्।
तया समिध्यस्व।
आयुर्मे दाः।
वर्चसा माऽञ्जीः।
अपीपरो मा रात्रिया अह्नो मा पाहि॥ ३९॥

[[4-10-5]]
एषा ते अग्ने समित्।
तया समिध्यस्व।
आयुर्मे दाः।
वर्चसा माऽञ्जीः।
अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा।
सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहा।
भूस्स्वाहा।
हुतꣳ हविः।
मधु हविः।
इन्द्रतमेऽग्नौ॥ ४०॥

[[4-10-6]]
पिता नोऽसि मा मा हिꣳसीः।
अश्याम ते देव घर्म।
मधुमतो वाजवतः पितुमतः।
अङ्गिरस्वतस्स्वधाविनः।
अशीमहि त्वा मा मा हिꣳसीः।
स्वाहा त्वा सूर्यस्य रश्मिभ्यः।
स्वाहा त्वा नक्षत्रेभ्यः॥ ४१॥
ब्रह्मवर्चसाय पीपिहि स्कन्दयाद्रुद्राय रुद्रहोत्रे स्वाहाऽह्नो मा पाह्यग्नौ सप्त च॥ १०॥

[[4-11-1]]
घर्म या ते दिवि शुक्।

या गा॑य॒त्रे छन्द॑सि।
या ब्रा᳚ह्म॒णे।
या ह॑वि॒र्धाने᳚।
तां त॑ ए॒तेनाव॑यजे॒ स्वाहा᳚।
घर्म॒ या ते॒ऽन्तरि॑क्षे॒ शुक्।
या त्रैष्टु॑भे॒ छन्द॑सि।
या रा॑ज॒न्ये᳚।
याऽऽग्नी᳚ध्रे।
तां त॑ ए॒तेनाव॑यजे॒ स्वाहा᳚॥ ४२॥

[[4-11-2]]
घर्म॒ या ते॑ पृथि॒व्याꣳ शुक्।
या जाग॑ते॒ छन्द॑सि।
या वैश्ये᳚।
या सद॑सि।
तां त॑ ए॒तेनाव॑यजे॒ स्वाहा᳚।
अनु॑ नो॒ऽद्यानु॑मतिः।
अ॒न्विद॑नुमते॒ त्वम्।
दि॒वस्त्वा॑ प॒रस्पाया᳚ः।
अ॒न्तरि॑क्षस्य त॒नुव॑ः पाहि।
पृ॒थि॒व्यास्त्वा॒ धर्म᳚णा॥ ४३॥

[[4-11-3]]
व॒यमनु॑क्रामाम सुवि॒ताय॒ नव्य॑से।
ब्रह्म॑णस्त्वा प॒रस्पाया᳚ः।
क्ष॒त्त्रस्य॑ त॒नुव॑ः पाहि।
वि॒शस्त्वा॒ धर्म᳚णा।
व॒यमनु॑क्रामाम सुवि॒ताय॒ नव्य॑से।
प्रा॒णस्य॑ त्वा प॒रस्पायै᳚।
चक्षु॑षस्त॒नुव॑ः पाहि।

श्रोत्रस्य त्वा धर्मणा।
वयमनुक्रामाम सुविताय नव्यसे।
वल्गुरसि शंयुधायाः॥ ४४॥

[[4-11-4]]
शिशुर्जनधायाः।
शं च वक्षि परि च वक्षि।
चतुस्स्रक्तिर्नाभिर्ऋतस्य।
सदो विश्वायुश्शर्म सप्रथाः।
अप द्वेषो अप ह्वरः।
अन्यद्व्रतस्य सश्चिम।
घर्मैतत्तेऽन्नमेतत्पुरीषम्।
तेन वर्धस्व चा च प्यायस्व।
वर्धिषीमहि च वयम्।
आ च प्यासिषीमहि॥ ४५॥

[[4-11-5]]
रन्तिर्नामासि दिव्यो गन्धर्वः।
तस्य ते पद्वद्धविर्धानम्।
अग्निरध्यक्षाः।
रुद्रोऽधिपतिः।
समहमायुषा।
सं प्राणेन।
सं वर्चसा।
सं पयसा।
सं गौपत्येन।
सꣳ रायस्पोषेण॥ ४६॥

[[4-11-6]]
व्यसौ।
योऽस्मान्द्वेष्टि।

यं च॑ व॒यं द्वि॒ष्मः।
अचि॑क्रदद्वृ॒षा हरि॑ः।
म॒हान्मि॒त्रो न द॑र्श॒तः।
सꣳ सूर्ये॑ण रोचते।
चिद॑सि समु॒द्रयो॑निः।
इन्दु॒र्दक्ष॑श्श्ये॒न ऋ॒तावा॑।
हिर॑ण्यपक्षश्शकु॒नो भु॑र॒ण्युः।
म॒हान्थ्स॒धस्थे॑ ध्रु॒व आनिष॑त्तः॥ ४७॥

[[4-11-7]]
नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः।
वि॒श्वाव॑सुꣳ सोमगन्ध॒र्वम्।
आपो॑ ददृ॒शुषी॑ः।
तदृ॒तेना॒ व्या॑यन्न्।
तद॒न्ववै॑त्।
इन्द्रो॑ रारह॒ाण आ॑साम्।
परि॒ सूर्य॑स्य परि॒धीꣳर॑पश्यत्।
वि॒श्वाव॑सुर॒भि तन्नो॑ गृणातु।
दि॒व्यो ग॑न्ध॒र्वो रज॑सो वि॒मान॑ः।
यद्वा॑ घा स॒त्यमु॒त यन्न वि॒द्म॥ ४८॥

[[4-11-8]]
धियो॑ हिन्वा॒नो धिय॒ इन्नो॑ अव्यात्।
सस्निमविन्द॒च्चर॑णे न॒दीना॑म्।
अपा॑वृणो॒द्दुरो॒ अश्म॑व्रजानाम्।
प्रासा॑ गन्ध॒र्वो अ॒मृता॑नि वोचत्।
इन्द्रो॒ दक्षं॒ परि॑जानाद॒हीन॑म्।
ए॒तत्त्वं दे॑व घर्म दे॒वो दे॒वानुपा॑गाः।
इ॒दम॒हं म॑नु॒ष्यो॑ मनु॒ष्यान्॑।
सोम॑पी॒थानु॒ मेहि॑।

सह प्रजया सह रायस्पोषेण।
सुमित्रा न आप ओषधयस्सन्तु॥ ४९॥

[[4-11-9]]
दुर्मित्रास्तस्मै भूयासुः।
योऽस्मान्द्वेष्टि।
यं च वयं द्विष्मः।
उद्वयं तमसस्परि।
उदु त्यं चित्रम्।
इममू षु त्यमस्मभ्यꣳ सनिम्।
गायत्रं नवीयाꣳसम्।
अग्ने देवेषु प्रवोचः॥ ५०॥
याऽऽग्नीध्रे तां त एतेनावयजे स्वाहा धर्मणा शंयुधायाः प्यासिषीमहि पोषेण निषत्तो विघ्न सन्त्वष्टौ च॥ ११॥

[[4-12-1]]
महीनां पयोऽसि विहितं देवत्रा।
ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रसः।
वाजिनं त्वा वाजिनोऽवनयामः।
ऊर्ध्वं मनस्सुवर्गं॥ ५१॥ ॥ १२॥

[[4-13-1]]
अस्कान्द्यौः पृथिवीम्।
अस्कानृषभो युवा गाः।
स्कन्नेमा विश्वा भुवना।
स्कन्नो यज्ञः प्रजनयतु।
अस्कानजनि प्राजनि।
आ स्कन्नाज्जायते वृषा।
स्कन्नात्प्रजनिषीमहि॥ ५२॥ ॥ १३॥

[[4-14-1]]

या पुरस्ताँद्विद्युदापंतत्।
तां तं एतेनावंयजे स्वाहाँ।
या दंक्षिणतः।
या पश्चात्।
योत्तंरतः।
योपरिंष्टाद्विद्युदापंतत्।
तां तं एतेनावंयजे स्वाहाँ॥ ५३॥ ॥ १४॥

[[4-15-1]]
प्राणाय स्वाहाँ व्यानाय स्वाहांऽपानाय स्वाहाँ।
चक्षुंषे स्वाहा श्रोत्रांय स्वाहाँ।
मनंसे स्वाहां वाचे सरंस्वत्यै स्वाहाँ॥ ५४॥ ॥ १५॥

[[4-16-1]]
पूष्णे स्वाहां पूष्णे शरंसे स्वाहाँ।
पूष्णे प्रंपथ्यांय स्वाहां पूष्णे नरन्धिंषाय स्वाहाँ।
पूष्णेऽङ्घृंणये स्वाहां पूष्णे नरुणांय स्वाहाँ।
पूष्णे सांकेताय स्वाहाँ॥ ५५॥ ॥ १६॥

[[4-17-1]]
उदंस्य शुष्माँद्भानुर्नार्त बिभंर्ति।
भारं पृंथिवी न भूमं।
प्र शुक्रैतुं देवी मंनीषा।
अस्मथ्सुतंष्टो रथो न वाजी।
अर्चन्त एके महि सामं मन्वत।
तेन सूर्यंमधारयन्न्।
तेन सूर्यंमरोचयन्न्।
घर्मश्शिरस्तदयमग्निः।
पुरींषमसि संप्रियं प्रजयां पशुभिंर्भुवत्।
प्रजापंतिस्त्वा सादयतु।
तयां देवतंयाऽङ्गिरस्वद्ध्रुवा सींद॥ ५६॥ ॥ १७॥

[[4-18-1]]

यास्ते॑ अग्न आ॒र्द्रा योन॑यो॒ याः कु॑ला॒यिनीः॑।
ये ते॑ अग्न॒ इन्द॑वो॒ या उ॒ नाभ॑यः।
यास्ते॑ अग्ने त॒नुव॒ ऊर्जो॒ नाम॑।
ताभि॒स्त्वमु॒भयी॑भिस्सं॑विदा॒नः।
प्र॒जाभि॑रग्ने॒ द्रवि॑णे॒ह सी॑द।
प्र॒जाप॑तिस्त्वा सादयतु।
तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द॥ ५७॥ ॥ १८॥

[[4-19-1]]

अ॒ग्निर॑सि वैश्वान॒रो॑ऽसि।
सं॒व॒थ्स॒रो॑ऽसि परिवथ्स॒रो॑ऽसि।
इ॒दा॒व॒थ्स॒रो॑ऽसीदुवथ्स॒रो॑ऽसि।
इ॒द्व॒थ्स॒रो॑ऽसि वथ्स॒रो॑ऽसि।
तस्य॑ ते वस॒न्तश्शिरः॑।
ग्री॒ष्मो दक्षि॑णः प॒क्षः।
व॒र्षाः पुच्छ᳚म्।
श॒रदुत्त॑रः प॒क्षः।
हे॒म॒न्तो मध्य᳚म्।
पू॒र्व॒प॒क्षाश्चित॑यः।
अ॒प॒र॒प॒क्षाः पुरी॑षम्।
अ॒हो॒रा॒त्राणीष्ट॑काः।
तस्य॑ ते॒ मासा᳚श्चार्धमा॒साश्च॑ कल्पन्ताम्।
ऋ॒तव॑स्ते कल्पन्ताम्।
सं॒व॒थ्स॒रस्ते॑ कल्पताम्।
अ॒हो॒रा॒त्राणि॑ ते कल्पन्ताम्।
एति॒ प्रेति॒ वीति॒ समित्युदिति॑।
प्र॒जाप॑तिस्त्वा सादयतु।
तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वस्सी॑द॥ ५८॥

चित॑यो॒ नव॑ च॥ १९॥

[[4-20-1]]
भूर्भुव॒स्सुव॑ः।
ऊ॒र्ध्व ऊ॒ षु ण॑ ऊ॒तये॑।
ऊ॒र्ध्वो न॑ः पा॒ह्यꣳह॑सः।
वि॒धुं द॑द्रा॒णꣳ सम॑ने ब॒हूनाम्।
युवा॑न॒ꣳ सन्तं॑ पलि॒तो ज॑गार।
दे॒वस्य॑ पश्य॒ काव्यं॑ महि॒त्वाऽद्या म॒मार॑।
स ह्यस्समा॑न।
यद्द॒ते चि॑दभि॒श्रिष॑ः।
पु॒रा ज॒र्तृभ्य॑ आ॒तृद॑ः।
सन्धा॑ता स॒न्धिं म॒घवा॑ पु॒रो॒वसु॑ः॥ ५९॥

[[4-20-2]]
निष्क॑र्ता॒ विहु॑तं॒ पुन॑ः।
पुन॑रू॒र्जा स॒ह र॒य्या।
मा नो॑ घ॒र्म व्य॒थि॒तो वि॑व्यथो नः।
मा न॒ः पर॒मध॑रं॒ मा रजो॑ऽनैः।
मोष्व॑स्मा॒ꣳस्तम॑स्यन्त॒रा धा॑ः।
मा रु॒द्रिया॑सो अ॒भिगु॑र्वृ॒धा न॑ः।
मा न॒ः क्रतु॑भिर्हीडि॒तेभि॑र॒स्मान्।
द्विषा॑ सुनी॒ते मा परा॑दाः।
मा नो॑ रु॒द्रो निर्ऋ॑ति॒र्मा नो॒ अस्ता॑।
मा द्यावा॑पृथि॒वी ही॑डिषाताम्॥ ६०॥

[[4-20-3]]
उप॑ नो मि॒त्रावरुणावि॒हाव॑तम्।
अ॒न्वादी॑ध्याथामि॒ह न॑स्सखाया।
आ॒दि॒त्यानां॒ प्रसि॑तिर्हे॒तिः।
उ॒ग्रा श॒तापा॑ष्ठा घ॒ विषा॒ परि॑ णो वृणक्तु।

इमं मे वरुण तत्त्वा यामि।
त्वं नो अग्ने स त्वं नो अग्ने।
त्वमग्ने अयासि ।
उद्वयं तमसस्परि।
उदु त्यं चित्रम्।
वयस्सुपर्णाः ॥ ६१॥
पुरोवसुर्हीडिषाताꣳ सुपर्णाः॥ २०॥

[[4-21-1]]
भूर्भुवस्सुवः।
मयि त्यदिन्द्रियं महत्।
मयि दक्षो मयि क्रतुः।
मयि धायि सुवीर्यँम्।
त्रिशुग्घर्मो विभातु मे।
आकूँत्या मनसा सह।
विराजा ज्योतिषा सह।
यज्ञेन पयसा सह।
ब्रह्मणा तेजसा सह।
क्षत्रेण यशसा सह।
सत्येन तपसा सह।
तस्य दोहमशीमहि।
तस्य सुम्नमशीमहि।
तस्य भक्षमशीमहि।
तस्य त इन्द्रेण पीतस्य मधुमतः।
उपहूतस्योपहूतो भक्षयामि॥ ६२॥
यशसा सह षट्च॥ २१॥

[[4-22-1]]
यास्ते अग्ने घोरास्तनुवः।
क्षुच्च तृष्णा च।

अस्रुक्ानाहुतिश्च।
अशनया च पिपासा च।
सेदिश्चामतिश्च।
एतास्ते अग्ने घोरास्तनुवः।
ताभिरमुं गच्छ।
योँऽस्मान्द्वेष्टि।
यं च वयं द्विष्मः॥ ६३॥ ॥ २२॥

[[4-23-1]]
स्निक्क स्नीहिंतिश्च स्निहितिश्च।
उष्णा च शीता च।
उग्रा च भीमा च।
सदाम्नी सेदिरनिरा।
एतास्ते अग्ने घोरास्तनुवः।
ताभिरमुं गच्छ।
योँऽस्मान्द्वेष्टि।
यं च वयं द्विष्मः॥ ६४॥ ॥ २३॥

[[4-24-1]]
धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च।
निलिम्पश्च विलिम्पश्च विक्षिपः॥ ६५॥ ॥ २४॥

[[4-25-1]]
उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च।
सहसह्वाꣳश्च सहमानश्च सहस्वाꣳश्च सहीयाꣳश्च।
एत्य प्रेत्य विक्षिपः॥ ६६॥ ॥ २५॥

[[4-26-1]]
अहोरात्रे त्वोदीरयताम्।
अर्धमासास्त्वोदीञ्जयन्तु।
मासाँस्त्वा श्रपयन्तु।

ऋ॒तव॑स्त्वा पचन्तु।
सं॒व॒थ्स॒रस्त्वा॑ हन्त्वसौ॥ ६७॥ ॥ २६॥

[[4-27-1]]
खद्ध॒ङ्गहि।
छि॒न्धी भि॒न्धी ह॒न्धी कट्।
इति॒ वाच॑ः क्रू॒रा॒णि॥ ६८॥ ॥ २७॥

[[4-28-1]]
विगा इ॑न्द्र वि॒चर॑न्थ्स्पाशयस्व।
स्व॒पन्त॑मिन्द्र प॒शुमन्त॑मिच्छ।
वज्रे॑णा॒मुं बो॑धय दु॒र्वि॒दत्र॑म्।
स्व॒प॒तो॑ऽस्य॒ प्रह॒॑र॒ भोज॑नेभ्यः।
अग्ने॑ अ॒ग्निना॒ सं॑व॑दस्व।
मृत्यो॑ मृ॒त्युना॒ सं॑व॑दस्व।
नम॑स्ते अस्तु भगवः।
स॒कृत्ते॑ अ॒ग्ने नम॑ः।
द्विस्ते॒ नम॑ः।
त्रिस्ते॒ नम॑ः।
च॒तुस्ते॒ नम॑ः।
प॒ञ्चकृत्व॑स्ते॒ नम॑ः।
द॒श॒कृत्व॑स्ते॒ नम॑ः।
श॒त॒कृत्व॑स्ते॒ नम॑ः।
आ॒स॒ह॒स्र॒कृत्व॑स्ते॒ नम॑ः।
अ॒प॒रि॒मि॒त॒कृत्व॑स्ते॒ नम॑ः।
नम॑स्ते अस्तु॒ मा मा॑ हिꣳसीः॥ ६९॥
त्रिस्ते॒ नम॑स्स॒प्त च॑॥ २८॥

[[4-29-1]]
असृ॑न्मुखो रु॒धिरे॑णा॒व्य॑क्त।
य॒मस्य॑ दू॒तश्श्वपा॒द्विधा॑वसि।

गृध्रस्सुपर्णः कुणपं निषेवसे।
यमस्य दूतः प्रहितो भवस्य चोभयोः॥ ७०॥ ॥ २९॥

[[4-30-1]]
यदेतद्वृकसो भूत्वा।
वाग्देव्यभिरायसि।
द्विषन्तं मेऽभिराय।
तं मृत्यो मृत्यवे नय।
स आर्त्याऽऽर्तिमार्च्छतु॥ ७१॥ ॥ ३०॥

[[4-31-1]]
यदीषितो यदि वा स्वकामी।
भयेडको वदति वोचमेताम्।
तामिन्द्राग्नी ब्रह्मणा संविदानौ।
शिवामस्मभ्यं कृणुतं गृहेषु॥ ७२॥ ॥ ३१॥

[[4-32-1]]
दीर्घमुखि दुर्हणु।
मा स्म दक्षिणतो वदः।
यदि दक्षिणतो वदाद्द्विषन्तं मेऽवबाधासै॥ ७३॥ ॥ ३२॥

[[4-33-1]]
इत्थादुलूक आपप्तत्।
हिरण्याक्षो अयोमुखः।
रक्षसां दूत आगतः।
तमितो नाशयाग्ने॥ ७४॥ ॥ ३३॥

[[4-34-1]]
यदेतद्भूतान्यन्वाविश्य।
दैवीं वाचं वदसि।
द्विषतो नः परावद।

तान्मृ॑त्यो मृ॒त्यवे॑ नय।
त आर्त्या॑ऽऽर्ति॒माच्छ॑न्तु।
अ॒ग्निना॒ऽग्निस्सं॑व॑दताम्॥ ७५॥ ॥ ३४॥

[[4-35-1]]
प्र॒सार्य॑ स॒क्थ्यौ॑ पत॑सि।
स॒व्यम॑क्षि॑ नि॒पेपि॑ च।
मेह क॑स्यच॒नाम॑मत्॥ ७६॥ ॥ ३५॥

[[4-36-1]]
अ॒त्रिणा त्वा क्रिमे हन्मि।
कण्वे॑न ज॒मद॑ग्निना।
वि॒श्वाव॑सो॒र्ब्रह्म॑णा ह॒तः।
क्रिमी॑णा॒ꣳ राजा॑।
अप्ये॑षाꣳ स्थ॒पति॑र्ह॒तः।
अथो॑ मा॒ताऽथो॑ पि॒ता।
अथो॑ स्थू॒रा अथो॑ क्षु॒द्राः।
अथो॑ कृ॒ष्णा अथो॑ श्वे॒ताः।
अथो॑ आ॒शाति॑का ह॒ताः।
श्वे॒ताभि॑स्स॒ह सर्वे॑ ह॒ताः॥ ७७॥ ॥ ३६॥

[[4-37-1]]
आह॒राव॑द्य।
शृ॒तस्य॑ ह॒विषो॒ यथा॑।
तत्स॒त्यम्।
यद॒मुं य॒मस्य॒ जम्भ॑योः।
आद॑धामि॒ तथा॒ हि तत्।
खण्फण्म्रसि॑॥ ७८॥ ॥ ३७॥

[[4-38-1]]
ब्रह्म॑णा त्वा शपामि।

ब्रह्म॑णस्त्वा श॒पथे॑न शपामि।
घो॒रेण॑ त्वा॒ भृगू॑णां॒ चक्षु॑षा॒ प्रेक्षे᳚।
रौ॒द्रेण॒ त्वाऽङ्गि॑रसां॒ मन॑सा ध्यायामि।
अ॒घस्य॑ त्वा॒ धार॑या विध्यामि।
अध॑रो॒ मत्प॑द्यस्वासौ᳚॥ ७९॥ ॥ ३८॥

[[4-39-1]]
उत्तु॑द शिमिजावरि।
तल्पे᳚जे॒ तल्प॒ उत्तु॑द।
गि॒रीꣳरनु॒प्रवे॑शय।
मरी॑ची॒रुप॒ संनु॑द।
याव॑दि॒तः पु॒रस्ता॑दु॒दया॑ति॒ सूर्यः᳚।
ताव॑दि॒तो᳚ऽमुं ना॑शय।
यो᳚ऽस्मान्द्वेष्टि॑।
यं च॑ व॒यं द्वि॒ष्मः॥ ८०॥ ॥ ३९॥

[[4-40-1]]
भूर्भुव॒स्सुवो॒ भूर्भुव॒स्सुवो॒ भूर्भुव॒स्सुवः॑।
भुवो᳚ऽद्धायि॒ भुवो᳚ऽद्धायि॒ भुवो᳚ऽद्धायि।
नृ॒म्णायि नृ॒म्णं नृ॒म्णायि नृ॒म्णं नृ॒म्णायि नृ॒म्णम्।
नि॒धाय्यो᳚ऽवायि नि॒धाय्यो᳚ऽवायि नि॒धाय्यो᳚ऽवायि।
ए अ॒स्मे अ॒स्मे।
सुव॒र्नज्योतीः᳚॥ ८१॥ ॥ ४०॥

[[4-41-1]]
पृथि॒वी स॒मित्।
ताम॒ग्निस्समि॑न्धे।
साऽग्निꣳ समि॑न्धे।
ताम॒हꣳ समि॑न्धे।
सा मा॒ समि॑द्धा।
आयु॑षा॒ तेज॑सा।

वर्च॑सा श्रि॒या।
यश॑सा ब्रह्मवर्च॒से॑न।
अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा᳚।
अ॒न्तरि॑क्षꣳ स॒मित्॥ ८२॥

[[4-41-2]]
तां वा॒युस्समि॑न्धे।
सा वा॒युꣳ समि॑न्धे।
ताम॒हꣳ समि॑न्धे।
सा मा॒ समि॑द्धा।
आयु॑षा॒ तेज॑सा।
वर्च॑सा श्रि॒या।
यश॑सा ब्रह्मवर्च॒से॑न।
अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा᳚।
द्यौस्स॒मित्।
तामा॑दि॒त्यस्समि॑न्धे॥ ८३॥

[[4-41-3]]
साऽऽदि॒त्यꣳ समि॑न्धे।
ताम॒हꣳ समि॑न्धे।
सा मा॒ समि॑द्धा।
आयु॑षा॒ तेज॑सा।
वर्च॑सा श्रि॒या।
यश॑सा ब्रह्मवर्च॒से॑न।
अ॒न्नाद्ये॑न॒ समि॑न्ता॒ꣳ स्वाहा᳚।
प्रा॒जा॒प॒त्या मे॑ स॒मिद॑सि सपत्न॒क्षय॑णी।
भ्रा॒तृ॒व्य॒हा मे॑ऽसि॒ स्वाहा᳚।
अग्ने᳚ व्रतपते व्र॒तं च॑रिष्यामि॥ ८४॥

[[4-41-4]]
तच्छ॑केय॒ं तन्मे॑ राध्यताम्।

वायौ व्रतपत आदित्य व्रतपते।
व्रतानां व्रतपते व्रतं चरिष्यामि।
तच्छकेयं तन्मे राध्यताम्।
द्यौस्समित्।
तामादित्यस्समिन्धे।
साऽऽदित्यꣳ समिन्धे।
तामहꣳ समिन्धे।
सा मा समिद्धा।
आयुषा तेजसा॥ ८५॥

[[4-41-5]]
वर्चसा श्रिया।
यशसा ब्रह्मवर्चसेन।
अन्नाद्येन समिन्ताꣳ स्वाहा।
अन्तरिक्षꣳ समित्।
तां वायुस्समिन्धे।
सा वायुꣳ समिन्धे।
तामहꣳ समिन्धे।
सा मा समिद्धा।
आयुषा तेजसा।
वर्चसा श्रिया॥ ८६॥

[[4-41-6]]
यशसा ब्रह्मवर्चसेन।
अन्नाद्येन समिन्ताꣳ स्वाहा।
पृथिवी समित्।
तामग्निस्समिन्धे।
साऽग्निꣳ समिन्धे।
तामहꣳ समिन्धे।
सा मा समिद्धा।

आयुषा तेजसा।
वर्चसा श्रिया।
यशसा ब्रह्मवर्चसेन॥ ८७॥

[[4-41-7]]
अन्नाद्येन समिन्ताꣳ स्वाहा।
प्राजापत्या मे समिदसि सपत्नक्षयणी ।
भ्रातृव्यहा मेऽसि स्वाहा।
आदित्य व्रतपते व्रतमचारिषम्।
तदशकं तन्मेऽराधि।
वायो व्रतपतेऽग्ने व्रतपते।
व्रतानां व्रतपते व्रतमचारिषम्।
तदशकं तन्मेऽराधि॥ ८८॥
समित्समिन्धे व्रतं चरिष्याम्यायुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनाष्टौ च॥ ॥ ४१॥

[[4-42-1]]
शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः।
अहानि शं भवन्तु नश्शꣳ रात्रिः प्रति धीयताम्।
शमुषा नो व्यच्छतु शमादित्य उदेतु नः।
शिवा नश्शन्तमा भव सुमृडीका सरस्वति।
मा ते व्योम संदृशि।
इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्मह्यवास्तुस्स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।
प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठस्स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः।
आ वात वाहि भेषजं वि वात वाहि यद्रपः।
त्वꣳहि विश्वभेषजो देवानां दूत ईयसे।
द्वविमौ वातौ वात आसिन्धोरापरावतः॥ ८९॥

[[4-42-2]]
दक्षं मे अन्य आवातु पराऽन्यो वातु यद्रपः।

यद॒दो वा॑त ते गृ॒हे॑ऽमृत॑स्य नि॒धिर्हि॑तः।
ततो॑ नो देहि जी॒वसे॒ ततो॑ नो धेहि भेष॒जम्।
ततो॑ नो॒ मह॒ आव॑ह॒ वात॒ आवा॑तु भेष॒जम्।
शं॒भूर्म॑यो॒भूर्नो॑ हृ॒दे प्र ण॒ आयू॑ꣳषि तारिषत्।
इन्द्र॑स्य गृ॒हो॑ऽसि॒ तं त्वा॒ प्रप॑द्ये॒ सगु॒स्साश्वः॑।
स॒ह यन्मे॒ अस्ति॒ तेन॑।
भूः प्रप॑द्ये॒ भुवः॒ प्रप॑द्ये॒ सु॒वः॒ प्रप॑द्ये॒ भूर्भु॒वस्सु॒वः॒ प्रप॑द्ये वा॒युं प्रप॒द्येऽना॑र्तां दे॒वतां॒ प्रप॒द्येऽश्मा॑नमाख॒णं प्रप॑द्ये प्र॒जाप॑तेर्ब्रह्मको॒शं ब्रह्म॒ प्रप॑द्य ओं प्रप॑द्ये।
अ॒न्तरि॑क्षं म उ॒र्व॑न्तरं॑ बृ॒हद॒ग्नय॒ः पर्व॑ताश्च॒ यया॒ वात॑स्स्व॒स्त्या स्व॑स्ति॒ मां तया॑ स्व॒स्त्या स्व॑स्ति॒ मान॑सानि।
प्राणा॑पानौ मृ॒त्योर्मा॑ पातं॒ प्राणा॑पानौ॒ मा मा॑ हासिष्टं॒ मयि॑ मे॒धां मयि॑ प्र॒जां मय्य॒ग्निस्तेजो॑ दधातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयीन्द्र॑ इन्द्रि॒यं द॑धातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयि॒ सूर्यो॒ भ्राजो॑ दधातु॥ ९०॥

[[4-42-3]]
द्यु॒भिर॒क्तुभि॒ः परि॑पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒स्सिन्धुः॑ पृथि॒वी उ॒त द्यौः।
कया॑ नश्चि॒त्र आभु॑वदू॒ती स॒दावृ॑ध॒स्सखा॑।
कया॒ शचि॑ष्ठया वृ॒ता।
कस्त्वा॑ स॒त्यो मदा॑नां॒ मꣳहि॑ष्ठो मथ्स॒दन्ध॑सः।
दृ॒ढा चि॑दा॒रुजे॒ वसु॑।
अ॒भी षु॒ ण॒स्सखी॑नामवि॒ता ज॑रितॄ॒णाम्।
श॒तं भ॑वास्यू॒तिभि॑ः।
वय॑स्सुप॒र्णा उप॑सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः।
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य॑स्मान्नि॒धये॑व ब॒द्धान्॥ ९१॥

[[4-42-4]]
शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑।
शं योर॒भिस्र॑वन्तु नः।
ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्ष॒णीनाम्।
अ॒पो या॑चामि भेष॒जम्।

सु॒मि॒त्रा न॒ आप॒ ओष॑धयस्सन्तु दु॒र्मि॒त्रास्तस्मै॑ भूयासु॒र्यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः।
आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन।
म॒हे रणा॑य॒ चक्ष॑से।
यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑।
उ॒श॒तीरि॑व मा॒तरः॑।
तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ॥ ९२॥

[[4-42-5]]
आपो॑ ज॒नय॑था च नः।
पृ॒थि॒वी शा॒न्ता साऽग्निना॑ शा॒न्ता सा मे॑ शा॒न्ता शुच॑ꣳ शमयतु।
अ॒न्तरि॑क्षꣳ शा॒न्तं तद्वा॒युना॑ शा॒न्तं तन्मे॑ शा॒न्तꣳ शुच॑ꣳ शमयतु।
द्यौश्शा॒न्ता साऽऽदि॒त्येन॑ शा॒न्ता सा मे॑ शा॒न्ता शुच॑ꣳ शमयतु।
पृ॒थि॒वी शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्ति॒र्द्यौः शान्ति॒र्दिश॒ः शान्ति॑रवान्तरदि॒शाः शान्ति॑र॒ग्निः शान्ति॑र्वा॒युः शान्ति॑रादि॒त्यः शान्ति॑श्च॒न्द्रमाः॒ शान्ति॒र्नक्ष॑त्राणि॒ शान्ति॒राप॒ः शान्ति॒रोष॑धय॒ः शान्ति॒र्वन॒स्पत॑य॒ः शान्ति॒र्गौः शान्ति॑र॒जा शान्ति॒रश्व॒ः शान्ति॒ः पुरु॑ष॒ः शान्ति॒र्ब्रह्म॒ शान्ति॑र्ब्राह्म॒णः शान्ति॒ः शान्ति॑रे॒व शान्ति॒ः शान्ति॑र्मे अस्तु॒ शान्ति॑ः।
तया॒हꣳ शा॒न्त्या स॑र्वशा॒न्त्या मह्यं॑ द्वि॒पदे॒ चतु॑ष्पदे॒ च॒ शान्तिं॑ करोमि॒ शान्ति॑र्मे अस्तु॒ शान्ति॑ः।
एह॒ श्रीश्च॒ ह्रीश्च॒ धृति॑श्च॒ तपो॑ मे॒धा प्र॑ति॒ष्ठा श्र॒द्धा स॒त्यं धर्म॑श्चै॒तानि॒ मोत्ति॑ष्ठन्त॒मनूत्ति॑ष्ठन्तु॒ मा माꣳ॒ श्रीश्च॒ ह्रीश्च॒ धृति॑श्च॒ तपो॑ मे॒धा प्र॑ति॒ष्ठा श्र॒द्धा स॒त्यं धर्म॑श्चै॒तानि॑ मा॒ मा हा॑सिषुः।
उदायु॑षा स्वा॒युषोदोष॑धीनाꣳ॒ रसे॒नोत्प॒र्जन्य॑स्य॒ शुष्मे॒णोद॑स्थाम॒मृताꣳ॒ अनु॑।
तच्चक्षु॑र्दे॒वहि॑तं पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त्।
पश्ये॑म श॒रद॑श्श॒तं जीवे॑म श॒रद॑श्श॒तं नन्दा॑म श॒रद॑श्श॒तं मोदा॑म श॒रद॑श्श॒तं भवा॑म श॒रद॑श्श॒तꣳ शृ॒णवा॑म श॒रद॑श्श॒तं प्रब्र॑वाम श॒रद॑श्श॒तमजी॑तास्स्याम श॒रद॑श्श॒तं ज्योक्च॒ सूर्यं॑ दृ॒शे॥ ९३॥

[[4-42-6]]
य उद॑गान्मह॒तोऽर्ण॒वाद्वि॒भ्राज॑मानस्सरि॒रस्य॒ मध्या॒थ्स मा॑ वृष॒भो लोहि॑ता॒क्षस्सूर्यो॑ विप॒श्चिन्मन॑सा पुनातु।
ब्रह्म॑णश्श्चोत॑न्यसि॒ ब्रह्म॑ण आ॒णी स्थो॒ ब्रह्म॑ण आ॒वप॑नमसि धारि॒तेयं पृ॑थि॒वी ब्रह्म॑णा म॒ही धा॑रि॒तमे॑नेन म॒हद॒न्तरि॑क्षं॒ दिवं॑ दाधार पृथि॒वीꣳ सदे॑वां॒ यद॒हं वेद॒ तद॒हं धा॑रयाणि॒ मा मद्वेदोऽधि॒ विस्र॑सत्।

मेधामनीषे माऽऽविशताꣳ समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि।
आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः।
यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम।
ब्रह्म प्रावादिष्म तन्नो मा हासीत्।
ओं शान्तिः शान्तिः शान्तिः॥ ९४॥
परावतो दधातु बद्धाञ्जिन्वथ दृशे सप्त च॥ ४२॥

नमो युञ्जते वृष्णो अश्वस्य ब्रह्मन्प्रवर्ग्येण ब्रह्मन्प्रचरिष्यामो दश प्राचीरपश्यं गोपां देवस्य समुद्रायेषे पीपिहि घर्म या ते महीनां चत्वार्यस्कान्या पुरस्ताँथ्सप्त सप्त प्राणाय त्रीणि पूष्णे चत्वार्युदस्यैकादश यास्ते सप्ताग्निर्ध्रुवस्सीदैकान्न विꣳशतिर्भूरूर्ध्वस्त्रिꣳ शद्भूमयि षोडश यास्ते घोरा नव स्रिक्काष्टौ धुनिश्च द्वे उग्रश्च त्रीण्यहोरात्रे पञ्च खड्गीणि विगास्सप्तदशासृन्मुखश्चत्वारि यदेतद्वृकसः पञ्च यदीषितश्चत्वारि दीर्घमुखि त्रीणीत्थाच्चत्वारि यदेतद्भूतानि षड्ग्रसार्य त्रीन्यत्रिणा दशाहरावद्य ब्रह्मणा षट्थ् षडुत्तुदाष्टौ भूष्वदृथिव्यष्टषष्टिश्शं नस्सप्तपञ्चाशद्विचत्वारिꣳ शत्॥ ४२॥
नमो वाचे ब्रह्मन्प्रवर्ग्येण मयि रुगन्तरिक्षेण पिता नोऽसि महीनामुप नो यदेतद्भूर्द्युभिश्चतुरनवतिः॥ ९४॥

[[4-0-0]]
नमोऽनु मदन्तु।
ॐ शान्तिः शान्तिः शान्तिः॥